॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तिङन्ते

## दिवादयः



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं। हमारे द्वारा निर्मित इसी प्रकार की अन्य शिक्षण समग्री को हमारे इस अकाउंट https://archive.org/details/@sanskrit_sar से डाउनलोड करें।

दिनाङ्कः-

12.01.2022


अस्माकं सम्पर्कसूत्राणि—

e-mail अणुवाक्— samskritsaarah@gmail.com

YOUTUBE — संस्कृतसारः @sanskrit sar

FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा


निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# दिवादिगणे धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

## अथ परस्मैपदिनः

1. दिवुँ क्रीडाविजिगीषा..
2. षिवुँ तन्तुसन्ताने
3. नृतीँ गात्रविक्षेपे
4. त्रसीँ उद्वेगे
5. शो तनूकरणे
6. छो छेदने
7. षो अन्तकर्मणि
8. दो अवखण्डने
9. व्यधँ ताडने
10. पुषँ पुष्टौ
11. शुषँ शोषणे
12. णशँ अदर्शने

## अथात्मनेपदिनः

1. षूङ् प्राणिप्रसवे
2. दूङ् परितापे
3. दीङ् क्षये
4. डीङ् विहायसा गतौ
5. पीङ् पाने
6. माङ् माने
7. जनीँ प्रादुर्भावे
8. दीपीँ दीप्तौ
9. पदँ गतौ
10. विदँ सत्तायाम्
11. बुधँ अवगमने
12. युधँ संप्रहारे
13. सृजँ विसर्गे

## अथोभयपदिनः

1. मृषँ तितिक्षायाम्
2. णहँ बन्धने

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु ‘दिव्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

दिव् + लँट्/तिप्
दिव् श्यन्+ति (दिवादिभ्यः श्यन्)
दिव् य+ति
दीव् य+ति (हलि च)
**दीव्यति**

दिव् + लिँट्/तिप्/णल्
दिव् दिव् + अ
दि दिव् + अ
**दिदेव**

अ दिव् + लुँङ्/ तिप्
अ दिव् च्लिँ + त्
अ दिव् स् + त्
अ दिव् इ स् + ई त्
अ देव् इ + ई त्
**अदेवीत्**

**दिवुँ क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु॥ १॥**

❖ शपः श्यन्-विधायकं विधिसूत्रम्—

सूत्रम्— दिवादिभ्यः श्यन् (३,१.६९)

अर्थः— शपोऽपवादः। ‘हलि चे’ति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत्॥

**एवं षिवुँ तन्तुसन्ताने॥ २॥**

❖ क्रीडा= खेलनम्, विजिगीषा= जेतुम् इच्छा, व्यवहार= क्रय-विक्रयादिरूपः। अयं धातुः क्रीडार्थे द्युत्यर्थे चैव प्रसिद्धः।
❖ तन्तुसन्तानम्= सूचीव्यापारेण वस्त्रसंयोजनम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'दिव्' धातोः रूपाणि

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

| दिव् | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | दीव्यति | दीव्यतः | दीव्यन्ति | दीव्यसि | दीव्यथः | दीव्यथ | दीव्यामि | दीव्यावः | दीव्यामः |
| लिँट् | दिदेव | दिदिवतुः | दिदिवुः | दिदेविथ | दिदिवथुः | दिदिव | दिदेव | दिदिविव | दिदिविम |
| लुँट् | देविता | देवितारौ | देवितारः | देवितासि | देवितास्थः | देवितास्थ | देवितास्मि | देवितास्वः | देवितास्मः |
| लृँट् | देविष्यति | देविष्यतः | देविष्यन्ति | देविष्यसि | देविष्यथः | देविष्यथ | देविष्यामि | देविष्यावः | देविष्यामः |
| लोँट् | दीव्यतु-तात् | दीव्यताम् | दीव्यन्तु | दीव्य- तात् | दीव्यतम् | दीव्यत | दीव्यानि | दीव्याव | दीव्याम |
| लँङ् | अदीव्यत् | अदीव्यताम् | अदीव्यन् | अदीव्यः | अदीव्यतम् | अदीव्यत | अदीव्यम् | अदीव्याव | अदीव्याम |
| वि.लिँङ् | दीव्येत् | दीव्येताम् | दीव्येयुः | दीव्येः | दीव्येतम् | दीव्येत | दीव्येयम् | दीव्येव | दीव्येम |
| आ.लिँङ् | दीव्यात् | दीव्यास्ताम् | दीव्यासुः | दीव्याः | दाव्यास्तम् | दीव्यास्त | दीव्यासम् | दीव्यास्व | दीव्यास्म |
| लुँङ् | अदेवीत् | अदेविष्टाम् | अदेविषुः | अदेवीः | अदेविष्टम् | अदेविष्ट | अदेविषम् | अदेविष्व | अदेविष्म |
| लृँङ् | अदेविष्यत् | अदेविष्यताम् | अदेविष्यन् | अदेविष्यः | अदेविष्यतम् | अदेविष्यत | अदेविष्यम् | अदेविष्याव | अदेविष्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'नृत्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

नृत् + लँट्/तिप्
नृत् श्यन्+ति
नृत् य+ति
**नृत्यति**

नृत् नृत् + अ (लिँट्)
नर् त् नृत् + अ (उरत्)
न नर् त् + अ (लघूपधगुणः)
**ननर्त/ननर्त्त**

नृत् नृत् + अतुस्
नर् त् नृत् + अतुस्
न नृत् + अतुस्
**ननृततुः**

**नृतीँ गात्रविक्षेपे॥३॥ नृत्यति। ननर्त। नर्तिता॥**

❖ वैकल्पिक- इड्-विधायकं विधिसूत्रम्—

**सूत्रम्—** सेऽसिचि कृत-चृत-च्छृद-तृद-नृतः

**अर्थः—** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा। नर्तिष्यति, नर्त्स्यति। नृत्यतु। अनृत्यत्। नृत्येत्। नृत्यात्। अनर्तीत्। अनर्तिष्यत्, अनर्त्स्यत्॥

| | | |
|---|---|---|
| नृत्यति, नृत्यतः, नृत्यन्ति | नृत्यसि, नृत्यथः, नृत्यथ | नृत्यामि, नृत्यावः, नृत्यामः |
| ननर्त, ननृततुः, ननृतुः | ननर्तिथ, ननृतथुः, ननृत | ननर्त, ननर्तिव, ननर्तिम |
| नर्तिता,नर्तितारौ, नर्तितारः | नर्तितासि,नर्तितास्थः, नर्तितास्थ | नर्तितास्मि,नर्तितास्वः, नर्तितास्मः |
| नर्तिष्यति, नर्तिष्यतः, नर्तिष्यन्ति<br>नर्त्स्यति, नर्त्स्यतः, नर्त्स्यन्ति | नर्तिष्यसि, नर्तिष्यथः, नर्तिष्यथ<br>नर्त्स्यसि, नर्त्स्यथः, नर्त्स्यथ | नर्तिष्यामि, नर्तिष्यावः, नर्तिष्यामः<br>नर्त्स्यामि, नर्त्स्यावः, नर्त्स्यामः |
| नृत्यतु-तात्, नृत्यताम्,नृत्यन्तु | नृत्य-तात्, नृत्यतम्, नृत्यत | नृत्यानि, नृत्याव, नृत्याम |
| अनृत्यत्, अनृत्यताम्, अनृत्यन् | अनृत्यः, अनृत्यतम्, अनृत्यत | अनृत्यम्, अनृत्याव, अनृत्याम |
| नृत्येत्, नृत्येताम्, नृत्येयुः | नृत्येः, नृत्येतम्, नृत्येत | नृत्येयम्, नृत्येव, नृत्येम |
| नृत्यात्, नृत्यास्ताम्, नृत्यासुः | नृत्याः, नृत्यास्तम्, नृत्यास्त | नृत्यासम्, नृत्यास्व, नृत्यास्म |
| अनर्तीत्,अनर्तिष्टाम्,अनर्तिषुः | अनर्तीः,अनर्तिष्टम्,अनर्तिष्ट | अनर्तिषम्, अनर्तिष्व, अनर्तिष्म |
| अनर्तिष्यत्, अनर्त्स्यत् | | |

नृत् स्य +ति (लृट्)
नर्त् इ स्य + ति
**नर्तिष्यति**
नर्त् स्य + ति
**नर्त्स्यति**

अ नृत् + लुँङ्/ तिप्
अ नर्त् च्लिँ + त्
अ नर्त् स् + त्
अ नर्त् इ स् + ई त्
अ नर्त् इ + ई त्
**अनर्तीत्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'त्रस्' धातोः प्रक्रिया



त्रस् + लँट्/तिप्
त्रस् श्यन्+ति
त्रस् य+ति
1.त्रस्यति
2.त्रसति

त्रस् त्रस् + अतुस्
त्रेस् + अतुस्
1.त्रेसतुः
त त्रस् + अतुस्
2.तत्रसतुः

त्रसीँ उद्वेगे॥ ४॥ 'वा भ्राशे'ति श्यन्वा। त्रस्यति, त्रसति। तत्रास॥

❖ वैकल्पिक- एत्वाभ्यासलोप-विधायकं विधिसूत्रम्—
सूत्रम्— वा जॄ-भ्रमु-त्रसाम् (६,४.१२४)
अर्थः— एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा। त्रेसतुः, तत्रसतुः। त्रेसिथ, तत्रसिथ। त्रसिता॥

त्रस् त्रस् + अ (लिँट्)
त त्रस् + अ
तत्रास

सूत्रम्— वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः (३,१.७०)
अर्थः—एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे। पक्षे शप्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'शो-छो-सो-दो' धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

शो + लिँट्/तिप्/अ
शा + अ (आदेच उपदेशेऽशिति)
शा शा+औ (आत औ णलः)
श शा+औ (ह्रस्वः, वृद्धिः)
शशौ

शो + लँट्/तिप्
शो य+ति
श् य+ति
श्यति

अ शो स् + त्
अ शा स् + त्
अशात्

एर्लिँङि- देयात्

गातिस्था..- अदात्

अ शो स् + त्
अ शा स् + त्
अ शा स् इ स् + ई त्
अ शा स् इ + ई त्
अशासीत्

सूत्रम्— आदेच उपदेशेऽशिति (६,१.४५)
अर्थः— उपदेशे एजन्तस्य धातोरात्वं न तु शिति।
सूत्रम्— यम-रम-नमातां सँक् च (७,२.७३)
अर्थः— एषां सँक् स्याद्, एभ्यः सिँच इट् स्यात्परस्मैपदेषु।

शो तनूकरणे=तीक्ष्णीकरणे सूक्ष्मीकरणे च॥ ५॥
❖ ओतो लोप-विधायकं विधिसूत्रम्—
सूत्रम्— ओतः श्यनि (७,३.७१)
अर्थः— लोपः स्यात्। श्यति। श्यतः। श्यन्ति।
शशौ। शशतुः। शाता। शास्यति॥
❖ वैकल्पिक-सिचो लुक्-विधायकं विधिसूत्रम्—
सूत्रम्— विभाषा घ्रा-धेट्-शा- च्छा-सः (२,४.७८)
अर्थः— एभ्यस्सिचो लुग्वा स्यात्परस्मैपदे परे।
अशात्। अशाताम्। अशुः।
इट्सकौ। अशासीत्। अशासिष्टाम्॥
छो छेदने॥ ६॥ छ्यति॥
षो अन्तकर्मणि= नाशः॥ ७॥ स्यति। ससौ॥
दो अवखण्डने॥ ८॥ द्यति। ददौ। देयात्। अदात्॥

# परस्मैपदिधातुषु 'व्यध्-पुष्-शुष्' धातूनां प्रक्रिया



ङित्

व्यध् य + तिप्
व् इ ध् य+ति
**विध्यति**

व्यध् व्यध् + अ
विध् व्यध् + अ
(लिँट्यभ्यास्योभयेषाम्)
वि व्यध् + अ
(अभ्यासकार्यमुपधादीर्घश्च)
**विव्याध**

व्यध् + ता
व्यद्+ धा धत्व-जश्त्वे
**व्यद्धा**

व्यध् + अतुस्
(ग्रहिज्या......)
विध् + अतुस्
विध् विध् + अतुस्
**विविधतुः**

वि व्यध् + इथ=
**1.विव्यधिथ**
वि व्यध् + थ
वि व्यध् + ध (धत्वम्)
वि व्यद् + ध (जश्त्वम्)
**2.विव्यद्ध**

व्यध् स्य + ति
**व्यत्स्यति** (चर्त्वम्)

अव्यध् स् + ईत्
**अव्यात्सीत्**
(हलन्तलक्षणा-वृद्धिः)

अपुष् च्लिँ + त्
अपुष् अ + त्
(पुषाद्युतादि...)
**अपुषत्**

- व्यधँ ताडने = बाणादिना पीडने॥ ९॥

❖ सम्प्रसारण-विधायकं विधिसूत्रम्—

**सूत्रम्**— ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च (६,१.१६)

**अर्थः**— एषां सम्प्रसारणं स्यात्किति ङिति च।

विध्यति। विव्याध। विविधतुः। विविधुः। विव्यधिथ, विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्॥

- पुषँ पुष्टौ॥ १०॥ पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत्॥
- शुषँ शोषणे॥ ११॥ शुष्यति। शुशोष। अशुषत्॥
- एवं तुषँ प्रीतौ, प्रीतिस्तृप्तिः।
- दुषँ वैकृत्ये,वैकृत्यं विकृतिः। (इत्यधिकः पाठः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदिधातुषु 'नश्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

नश् नश् + अतुस्
नेश् + अतुस्(अत एक..)
नेशतुः

नश् नश् + थल्
नेश् + इथ (थलि च सेटि)
नेशिथ

नश् नश् + थल्
न न न् श् + थ
न नं ष् + थ (व्रश्च..
ननंष्ठ

| | | |
|---|---|---|
| नश्यति, नश्यतः, नश्यन्ति | नश्यसि, नश्यथः, नश्यथ | नश्यामि, नश्यावः, नश्यामः |
| ननाश, नेशतुः, नेशुः | नेशिथ -ननंष्ठ, नेशथुः, नेश | ननाश-ननश, नेशिव-नेश्व, नेशिम, नेश्म |
| नशिता, नशितारौ, नशितारः<br>नंष्टा, नंष्टारौ, नंष्टारः | नशितासि, नशितास्थः, नशितास्थ<br>नंष्टासि, नंष्टास्थः, नंष्टास्थ | नशितास्मि, नशितास्वः, नशितास्मः<br>नंष्टास्मि, नंष्टास्वः, नंष्टास्मः |
| नशिष्यति, नशिष्यतः, नशिष्यन्ति<br>नङ्क्ष्यति, नङ्क्ष्यतः, नङ्क्ष्यन्ति | नशिष्यसि, नशिष्यथः, नशिष्यथ<br>नङ्क्ष्यसि, नङ्क्ष्यथः, नङ्क्ष्यथ | नशिष्यामि, नशिष्यावः, नशिष्यामः<br>नङ्क्ष्यामि, नङ्क्ष्यावः, नङ्क्ष्यामः |
| नश्यतु-तात्, नश्यताम्, नश्यन्तु | नश्य-तात्, नश्यतम्, नश्यत | नश्यानि, नश्याव, नश्याम |
| अनश्यत्, अनश्यताम्, अनश्यन् | अनश्यः, अनश्यतम्, अनश्यत | अनश्यम्, अनश्याव, अनश्याम |
| नश्येत्, नश्येताम्, नश्येयुः | नश्येः, नश्येतम्, नश्येत | नश्येयम्, नश्येव, नश्येम |
| नश्यात्, नश्यास्ताम्, नश्यासुः | नश्याः, नश्यास्तम्, नश्यास्त | नश्यासम्, नश्यास्व, नश्यास्म |

❑ णशँ अदर्शने॥ १२॥ नश्यति। ननाश। नेशतुः॥

❖ वैकल्पिकेड्-विधायकं विधिसूत्रम्—

सूत्रम्— रधादिभ्यश्च (७,२.४५)

अर्थः— 'रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह्' एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नेशिथ॥

❖ नुँम्-विधायकं विधिसूत्रम्—

सूत्रम्— मस्जि-नशोर्झलि (७,१.६०)

अर्थः— नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व। नेशिम, नेश्म। नशिता, नंष्टा। नशिष्यति, नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्॥

अनश् च्लिँ + त्
अनश् अ + त् (पुषाद्युतादि...)
अनशत्

नश् स्य + ति
न न् ष् स्य + ति
नंक् ष्य + ति
नङ्क्ष्यति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु ‘सू-दू’ धातोः प्रक्रिया



सू+ लँट्/त
सू य+ त
**सूयते**

सू+ लुँट्/त
सू इ+ ता (स्वरति..)
सो इ+ ता
**सविता, सोता**

सू+ लिँट्/त/एश्
सू सू+ ए
सु सू+ ए
सु सुव्+ ए
(अचिश्नु...) षत्वम्
**सुषुवे**

- **षूङ् प्राणिप्रसवे॥ १३॥** सूयते। सुषुवे। (‘श्र्युकः किति’ इति निषेधं बाधित्वा) क्रादिनियमादिट्। सुषुविषे। सुषुविवहे। सुषुविमहे। सविता सोता॥
- **दूङ् परितापे॥ १४॥** (परितापः= खेदः) दूयते॥

| | | |
|---|---|---|
| सविता<br>सोता | सवितारौ<br>सोतारौ | सवितारः<br>सोतारः |
| सवितासे<br>सोतासे | सवितासाथे<br>सोतासाथे | सविताध्वे<br>सोताध्वे |
| सविताहे<br>सोताहे | सवितास्वहे<br>सोतास्वहे | सवितास्महे<br>सोतास्महे |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'दी' धातोः प्रक्रिया



दी+ लिँट्/त/एश्
दी दी + य् ए
दि दी + ये
दिदीये

दी+ लुँट्/त/डा
दा तास् + आ
दा+ ता
दाता

अ दी च्लिँ+ त
अ दा स्+ त
अदास्त

करिष्याणम्—(एरनेकाचोऽसंयोगपूर्वस्य—६.४.८२)

- डीङ् विहायसा गतौ॥ १६॥ डीयते। डिड्ये। डयिता॥
- पीङ् पाने॥ १७॥ पीयते। पेता। अपेष्ट॥
- माङ् माने॥ १८॥ मायते। ममे॥

1.मीञ्
2.मिञ्
3.दीङ्
आ
1.ल्यपि
2. शिद्भिन्न-एच्-निमित्तकप्रत्यये

- दीङ् क्षये॥ १५॥ दीयते॥

❖ युँडागम-विधायकं विधिसूत्रम्—

**सूत्रम्—** दीङो युँडचि क्ङिति (६,४.६३) कृतम्

**अर्थः—** दीङः परस्याजादेः क्ङित आर्धधातुकस्य युँट्।

**वार्तिकम्—** वुँग्युँटावुवङ्यणोः सिद्धौ वक्तव्यौ। दिदीये।

**अर्थः—**उवङि कर्तव्ये वुँक् तथा यणि कर्तव्ये युँट् सिद्धो वाच्यः।

❖ आत्व-विधायकं विधिसूत्रम्—

**सूत्रम्—** मीनाति-मिनोति-दीङां ल्यपि च (६,१.५०)

**अर्थः—** एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते। दाता। दास्यति।

**वार्तिकम्—** (स्थाघ्वोरित्वे दीङः प्रतिषेधः) अदास्त॥

**अर्थः—** 'स्थाघ्वोरिच्च' इति सूत्रेण इत्वे कर्तव्ये दीङो घुसञ्ज्ञायाः प्रतिषेधो भवति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'जन्-दीप्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

❑ जनँी प्रादुर्भावे॥ १९॥ (अनुदातेतः,उदात्तः, उत्पत्तिरभिव्यक्तिर्वा)

❖ जादेश-विधायकं विधिसूत्रम्—

सूत्रम्— ज्ञा-जनोर्जा (७,३.७९)

अर्थः— अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जज्ञिषे।जज्ञिवहे। जनिता। जनिष्यते॥

❖ वैकल्पिकचिणादेश-विधायकं विधिसूत्रम्—

सूत्रम्— दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् (३,१.६१)

अर्थः— एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे॥

❖ लुक्-विधायकं विधिसूत्रम्—

सूत्रम्— चिणो लुक् (६,४.१०४)

अर्थः— चिणः परस्य (तशब्दस्य) लुक् स्यात्॥

❖ वृद्धि-निषेधकं विधिसूत्रम्—

सूत्रम्— जनि-वध्योश्च (७,३.३५)

अर्थः— अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि,अजनिष्ट

❑ दीपँी दीप्तौ॥ २० ॥ दीप्यते। दिदीपे। अदीपि, अदीपिष्ट॥

जन् य+ त(लँट्)
जा य+ त
जायते

जन् जन् + ए/त(लिँट्)
ज ज् न् + ए (गमहनजन...)
ज ज् ञ् + ए (श्चुत्वम्)
जज्ञे

जन् च्लिँ+ त(लुँङ्)
जन् चिण् + त
जन् इ + त
जन् इ
अजनि

जन् च्लिँ+ त(लुँङ्)
जन् इ स् + त
अजन् इ स् + त
अजनिष्ट

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'पद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते दिवादयः)

- पदँ गतौ॥ २१॥ पद्यते। पेदे। पत्ता। पत्सीष्ट॥
- चिणादेश-विधायकं विधिसूत्रम्—

सूत्रम्— चिण् ते पदः (३,१.६०)

अर्थः— पदश्च्लेश्चिण् स्यात्तशब्दे परे।

अपादि। अपत्साताम्। अपत्सत॥

पद् य+ त(लँट्)
पद्यते

पद् पद्+ ए/त(लिँट्)
पेद्+ ए (एत्वाभ्यासलोपौ)
पेदे

पद् च्लिँ+ त(लुँङ्)
अपद् चिण् + त
अपद् इ + त
अपद् इ (चिणो लुक्)
अपादि (अत उपधायाः)

खरि च

पद्+ ता= पत्ता
पद् स्य+ ते= पत्स्यते
पद्+ सी स् त= पत्सीष्ट
अपद् स्य+ त= अपत्स्यत

लँट्— पद्यते पद्येते पद्यन्ते। पद्यसे पद्येथे पद्यध्वे। पद्ये पद्यावहे पद्यामहे।

लिँट्— पेदे पेदाते पेदिरे। पेदिषे पेदाथे पेदिध्वे। पेदे पेदिवहे पेदिमहे।

लुँट्— पत्ता पत्तारौ पत्तारः। पत्तासे पत्तासाथे पत्ताध्वे। पत्ताहे पत्तास्वहे पत्तास्महे।

लृँट्— पत्स्यते पत्स्येते पत्स्यन्ते। पत्स्यसे पत्स्येथे पत्स्यध्वे। पत्स्ये पत्स्यावहे पत्स्यामहे।

लोँट्— पद्यताम् पद्येताम् पद्यन्ताम्। पद्यस्व पद्येथाम् पद्यध्वम्। पद्यै पद्यावहै पद्यामहै।

लँङ्— अपद्यत अपद्येताम् अपद्यन्त। अपद्यथाः अपद्येथाम् अपद्यध्वम्। अपद्ये अपद्यावहि अपद्यामहि।

विधिलिँङ्—पद्येत पद्येयाताम् पद्येरन्। पद्येथाः पद्येयाथाम् पद्येध्वम्। पद्येय पद्येवहि पद्येमहि।

आशीर्लिँङ्—पत्सीष्ट पत्सीयास्ताम् पत्सीरन्। पत्सीष्ठाः पत्सीयास्थाम् पत्सीध्वम्। पत्सीय पत्सीवहि पत्सीमहि।

लुँङ्—अपादि अपत्साताम् अपत्सत। अपत्थाः अपत्साथाम् अपद्ध्वम्। अपत्सि अपत्स्वहि अपत्स्महि।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'बुध्' धातोः प्रक्रिया



❑ बुधँ अवगमने= ज्ञाने॥ २३॥
बुध्यते। बोद्धा। भोत्स्यते। भुत्सीष्ट।
अबोधि, अबुद्ध। अभुत्साताम्॥

बुध् + ता
बोध् + धा (झषस्तथो..)
बोद् + धा (झलां जश् झशि)
बोद्धा

बोध् स्य + ते
बोध् स्य + ते
(भष्भावः, चर्त्वम्)
भोत्स्यते

बुध् च्लिँ+ त
अबुध् चिण् + त
अबुध् इ + त
अबुध् इ (चिणो लुक्)
अबोधि

बुध् च्लिँ+ त
अबुध् स्+त (झलो झलि)
अबुध् +ध (झषस्तथो..)
अबुद्ध (जश्त्वम्) 'लिँङ्-सिँचावात्मनेपदेषु' इत्यनेन कित्वान्न लघूपधगुणः।

लँट्— बुध्यते बुध्येते बुध्यन्ते। बुध्यसे बुध्येथे बुध्यध्वे। बुध्ये बुध्यावहे बुध्यामहे।

लिँट्— बुबुधे बुबुधाते बुबुधिरे। बुबुधिषे बुबुधाथे बुबुधिध्वे। बुबुधे बुबुधिवहे बुबुधिमहे।

लुँट्— बोद्धा बोद्धारौ बोद्धारः। बोद्धासे बोद्धासाथे बोद्धाध्वे। बोद्धाहे बोद्धास्वहे बोद्धास्महे।

लृँट्— भोत्स्यते भोत्स्येते भोत्स्यन्ते। भोत्स्यसे भोत्स्येथे भोत्स्यध्वे। भोत्स्ये भोत्स्यावहे भोत्स्यामहे।

लोँट्— बुध्यताम् बुध्येताम् बुध्यन्ताम्। बुध्यस्व बुध्येथाम् बुध्यध्वम्। बुध्यै बुध्यावहै बुध्यामहै।

लँङ्— अबुध्यत अबुध्येताम् अबुध्यन्त। अबुध्यथाः अबुध्येथाम् अबुध्यध्वम्। अबुध्ये अबुध्यावहि अबुध्यामहि।

विधिलिँङ्— बुध्येत बुध्येयाताम् बुध्येरन्। बुध्येथाः बुध्येयाथाम् बुध्येध्वम्। बुध्येय बुध्येवहि बुध्येमहि।

आशीर्लिँङ्— भुत्सीष्ट भुत्सीयास्ताम् भुत्सीरन्। भुत्सीष्ठाः भुत्सीयास्थाम् भुत्सीध्वम्। भुत्सीय भुत्सीवहि भुत्सीमहि।

लुँङ्— अबोधि-अबुद्ध अभुत्साताम् अभुत्सत। अबुद्धाः अभुत्साथाम् अभुद्ध्वम्। अभुत्सि अभुत्स्वहि अभुत्स्महि।

लृँङ्— अभोत्स्यत अभोत्स्येताम् अभोत्स्यन्त। अभोत्स्यथाः अभोत्स्येथाम् अभोत्स्यध्वम्। अभोत्स्ये अभोत्स्यावहि अभोत्स्यमहि।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदिधातुषु 'युध्-सृज्' धातोः प्रक्रिया



- युधँ संप्रहारे= सङ्ग्रामकरणे॥ २४॥ युध्यते। युयुधे। योद्धा। अयुद्ध॥
- सृजँ विसर्गे= त्यागे (वि-उपसर्गपूर्वके) निर्माणार्थे (केवल-सृजेः)॥ २५॥ सृज्यते। ससृजे। ससृजिषे॥

❖ अमागम-विधायकं विधिसूत्रम्—

**सूत्रम्— सृजि-दृशोर्झल्यमकिति(६,१.५८)**

**अर्थः—** अनयोर् अमागमः स्याज्झलादावकिति। स्रष्टा। स्रक्ष्यते। सृक्षीष्ट। असृष्ट। असृक्षाताम्॥

सृज् + ता
सृ अम् ज् + ता
स् र् अ ज् + ता (यणादेशे)
स् र् अ ष् + ता (व्रश्चेति षत्वे) (ष्टुत्वे)
**स्रष्टा**

सृज् स्य + ते
सृ अम् ष् स्य + ते
सृ अ क् ष्य + ते
**स्रक्ष्यते**

असृज् स् + त
असृष् + त
**असृष्ट**

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'मृष्-नह्' धातोः प्रक्रिया



लँट्—परस्मै. मृष्यति मृष्यतः मृष्यन्ति। मृष्यसि मृष्यथः मृष्यथ। मृष्यामि मृष्यावः मृष्यामः।
लँट्—आत्मने. मृष्यते मृष्येते मृष्यन्ते । मृष्यसे मृष्येथे मृष्यध्वे। मृष्ये मृष्यावहे मृष्यामहे।
लिँट्—परस्मै. ममर्ष ममृषतुः ममृषुः। ममर्षिथ ममृषथुः ममृष। ममर्ष ममृषिव ममृषिम।
लिँट्—आत्मने. ममृषे ममृषाते ममृषिरे।ममृषिषे ममृषाथे ममृषिध्वे। ममृषे ममृषिवहे ममृषिमहे।
लुँट्— परस्मै. आत्मने. मर्षिता मर्षितारौ मर्षितारः।
लृँट्— परस्मै. मर्षिष्यति मर्षिष्यतः मर्षिष्यन्ति।... आत्मने. मर्षिष्यते मर्षिष्येते मर्षिष्यन्ते ।....
लोँट्— परस्मै. मृष्यतु-तात् मृष्यताम् मृष्यन्तु।...... आत्मने. मृष्यताम् मृष्येताम् मृष्यन्ताम् ।......
लँङ्— परस्मै. अमृष्यत् अमृष्यताम् अमृष्यन्।.... आत्मने. अमृष्यत अमृष्येताम् अमृष्यन्त।....
विधिलिँङ्— परस्मै. मृष्येत् मृष्येताम् मृष्येयुः।... आत्मने. मृष्येत मृष्येयाताम् मृष्येरन् ।.....
आशीर्लिँङ्— परस्मै. मृष्यात् मृष्यास्ताम् मृष्यासुः।.. आत्मने. मर्षिषीष्ट मर्षिषीस्ताम् मर्षिषीरन् ।...
लुँङ्— परस्मै. अमर्षीत् अमर्षिष्टाम् अमर्षिषुः।... आत्मने. अमर्षिष्ट अमर्षिषाताम् अमर्षिषत ।...
लृँङ्— परस्मै. अमर्षिष्यत् अमर्षिष्यताम् अमर्षिष्यन्।... आत्मने. अमर्षिष्यत अमर्षिष्येताम् अमर्षिष्यन्त ।...

❑ **णहँ** बन्धने॥ २७॥
नह्यति, नह्यते। ननाह।
नेहिथ, ननद्ध। नेहे।
नद्धा। नत्स्यति।
अनात्सीत्, अनद्ध॥
॥ इति दिवादयः॥ ४॥

❑ **मृषँ** तितिक्षायाम्॥ २६॥ मृष्यति, मृष्यते॥ ममर्ष। ममर्षिथ। ममृषिषे। मर्षितासि। मर्षिष्यति, मर्षिष्यते॥

# दिवादिगणस्य परीक्षणम्

**०१. 'श्यन्'प्रत्ययस्य किमवशिष्यते ?**

**क. य**

ख. य्

ग. यन्

घ. श्य

**०२. 'दिव्'धातोः' प्रसिद्धिः कस्मिन्नर्थे ?**

क. कान्तिः

ख. स्तुतिः

**ग. क्रीडा**

घ. विजिगीषा

**०३. 'दीव्यति' इत्यत्र दीर्घः केन ?**

क. अकः सवर्णे दीर्घः

**ख. हलि च**

ग. र्वोरुपधाया दीर्घ इकः

घ. प्रथमयोः पूर्वसवर्णः

**०४. वलाद्यार्धधातुकस्य वेड्विधायकं सूत्रमस्ति—**

क. सेऽसिँचि कृतचृतच्छृदतृदनृतः

ख. विभाषा घ्राधेट्शाच्छासः

ग. वा जॄभ्रमुत्रसाम्

**घ. रधादिभ्यश्च**

**०५. 'श्यति' इति कस्य धातोः रूपम् ?**

क. शा

**ख. शो**

ग. श्य

घ. शी

**०६. छो धातोः लिँटि किं रूपम् ?**

**क. चच्छौ**

ख. चछौ

ग. चक्षौ

घ. चक्षे

**०७. 'षोऽन्तकर्मणि' इत्यत्र 'अन्तकर्म' शब्दस्य कोऽर्थः?**

क. अन्तर्कार्यम्

ख. भयम्

**ग. विनाशकरणम्**

घ. शयनम्

**०८. दोऽवखण्डने इति धातोः लुँङि किं रूपम् ?**

क. अदित

ख. अदौषीत्

ग. अदीत्

**घ. अदात्**

**०९. 'विव्याध' इति विषये इदं कथनमसङ्गतम्—**

**क. अत्र 'ग्रहिज्यावयि....' इत्यनेन सम्प्रसारणम्।**

ख. णलि इदं रूपं सिद्ध्यति।

ग. अनभ्यासाकारस्य 'अत उपधाया' इत्यनेन वृद्धिः।

घ. 'लिँट्यभ्यासस्योभयेषाम्' इत्यनेनाभ्यासस्य सम्प्रसारणम्।

**१०. रधादिष्वयं धातुर्नास्ति—**

क. दृप्

ख. द्रुह्

ग. ष्णिह्

**घ. पुष्**

**११.नशिष्यति, नङ्क्ष्यति इत्यत्र वेट् केन सूत्रेण—**

क. मस्जिनशोर्झलि

ख. सेऽसिचि कृत-चृत-च्छृत-तृद-नृतः

ग. विभाषा-घ्रा-धेट्-शाच्छासः

**घ. रधादिभ्यश्च**

**१२. शुद्धं चिनुत—**

क. दीँङ् क्षये

ख. दुङ् परितापे

ग. दूङ् परितापे

घ. शुष शोषणे

**१३. 'दिदीये' इत्यत्र यणादेशः कथं प्राप्तः?**

क. यकारस्य सिद्धत्वात्

**ख. यकारस्यासिद्धत्वात्**

ग. ईकारस्य सिद्धत्वात्

घ. ईकारस्यासिद्धत्वात्

**१४. 'मीनाति-मिनोति-दीङां ल्यपि च' इत्यनेनात्वं कुत्र न भवति—**

क. लुँटि

ख. लृँटि

ग. लुँङि

**घ. लिँटि**

**१५. 'त्रस्'धातोः लटिँ किं रूपम्?**

क. त्रसति

ख. त्रस्यति

**ग. उपर्युक्तेषूभयम्**

घ. त्रास्यति

**१६. 'षो'धातोर्लोँटि मध्यमैकवचने किं रूपम्?**

क. स्य

ख. ष्य

**ग. स्य, स्यतात्**

घ. सोहि, सोतात्

**१७. एतेष्वयं धातुः प्रायः अव-उपसर्गपूर्वक एव प्रयुज्यते—**

क. व्यधँ ताडने

ख. डीङ् विहायसा गतौ

**ग. दोऽवखण्डने**

घ. षूङ् प्राणिप्रसवे

**१८. अदाध्वम् इति कुत्र भवति—**

क. लुँटि

ख. लृँटि

**ग. लुँङि**

घ. लिँटि

**१९. 'ज्ञाजनोर्जा' इति सूत्रेण जादेशः कुत्र न भवति—**

क. लँटि

ख. लोँटि

**ग. लुँटि**

घ. लँङि

**२०. अजनि, अजनिष्ट इति रूपद्वयविषये इदं कथनमसङ्गतम्—**

क. दीपजनबुधेति सूत्रेण च्लेः स्थाने विकल्पेन चिणादेशः।

**ख. 'चिणो लुक्' इति सूत्रेण त्-शब्दस्य लुक् भवति।**

ग. 'जनिवध्योश्च' इति सूत्रेणोपधावृद्धेर्निषेधः।

घ. आत्मनेपदे इदं रूपम्।

**२१. 'पत्ता' इति रूपं कस्य धातोः ?**

**क. पदँ गतौ**

ख. पत्लृँ गतौ

ग. पतँ गतौ

घ. सर्वेषाम्

**२२. दिवादौ 'विद्'धातुः कस्मिन्नर्थे—**

क. ज्ञाने

ख. विचारणे

ग. लाभे

**घ. सत्तायाम्**

**२३. 'भोत्स्यामहे' इति रूपं कस्य ?**

क. भुज्धातोः लुँटि

ख. भुज्धातोः लृँटि

ग. बुध्-धातोः लृँटि

घ. बुध्-धातोः लुँटि

**२४. सृज्-धातुर्निर्माणार्थे कदा प्रयुज्यते—**

**क. उपसर्गहीनः**

ख. वि-उपसर्गपूर्वकः

ग. उपसर्गपूर्वकः

घ. उद्-उपसर्गपूर्वकः

२५. 'नहो धः' इति सूत्रं कुत्र न प्रवर्त्तते—

क. अनात्सीत्

ख. नत्स्यते

**ग. नेहिथ**

घ. ननद्ध